तोषाः[1]। यदूषा भवन्त्यनयोरेवैनं यज्ञिय आधत्ते। प्राजापत्या वा एते[2]। श्वःश्वो भूयांसो भवन्ति। प्रजननायैवैते। पशूनां वा एतत्प्रियं धाम[3]। यदूषा भवन्ति पशूनामेव प्रियं धामोपाप्नोति। अलेलेद्वा इयं पृथिवी। साबिभेदग्निर्मातिधक्ष्यतीति। अबिभेदग्निर्हरो मे विनेक्ष्यतीति[4]। आर्द्रेव हीयमासीत्। तां देवाः शर्कराभिरदृंहन्। तेजो ऽग्नावदधुः[5]। यच्छर्करा भवन्तीमामेव दृंहति। तेजो ऽग्नौ दधाति। अभिमृता वा इयं वृत्रेण। वम्रियस्त्वै[6] तद्विदुर्यत्रास्या जीवं यज्ञियम्। यद्वल्मीकवपा भवत्यस्या[7] एवैनं जीवे यज्ञिय आधत्ते। आपो वा इदमासन्। सलिलमेव स प्रजापतिर्वराहो भूत्वोपन्यमज्जत्। तस्य यावन्मुखमासीत्तावतीं मृदमुदहरत्। सेयमभवत्। यद्वराहविहतं भवत्यस्यामेवैनं प्रत्यक्षमाधत्ते। वराहो वा अस्यामन्नं पश्यति। तस्मा इयं विजिहीते। यद्वराहविहतं भवति तदेवान्नमवरुन्द्धे। यत्तदादत्त तददितिर्यदप्रथत तत्पृथिवी यदभवत्तद्भूमिः।

---

दधाव्। त ऊषा अभवन्. Thus it is clear that Schroeder did not understand the text.

1. The ms. ०ज०.
2. KS. ऊषाः.
3. KS. adds यदूषाः.
4. The three copies of Kap. ms. have three different readings: Lahore copy विनक्षति, Utrecht copy विनेक्ष्यति, Gottingen copy विनेक्षति KS. has विनेष्यति.
5. The ms. ०ग्नावेदधुः which could stand for ०ग्नावे[वा]दधुः.
6. The Kaṭh. and Kap. वम्रियस् is not known from any other source. MS. p. 90, 11. 12. 13 replaces it by वल्मीक (derived from वल्म, a dialectical variation for वम्र). The new Indo-Aryan बम्बी and बांबी are most probably developments of वम्रियस्. For the insertion of b in between m and r see NIA आंब, अम्बी>Skt. आम्र, NIA तांबा > Skt. ताम्र. The change of इय to ई is evidenced even today in loan-words: इन्द्रिय is pronounced इन्द्री.
7. KS. भवन्त्य० to be corrected.

यद्वराहविहतं भवति प्रथत एव प्रजया पशुभिः[1]। नाना वै पशूनामन्नान्यन्यद्गोरन्नमन्यदश्वस्यान्यदवेरन्यदजाया अन्यत्पुरुषस्य। आपो ऽन्नम्। यदप उपसृजति यावदेवान्नं तदवरुन्द्धे। [2]पञ्चैते संभाराः। पञ्च वै पुरुषे वीर्याणि। करोत्यनया वीर्यं करोत्यनया करोत्यनन। यावदेव वीर्यं तदाप्नोति। पञ्चैते संभाराः। पाङ्क्तो यज्ञः। यज्ञमेवावरुन्द्धे[2]। न वा ऋत ऊर्जो ऽन्नं धिनोति। ऊर्गुदुम्बरः। यदौदुम्बराणि भवन्त्यन्न एवोर्जं दधाति। शमीमयानि भवन्ति मिथुनत्वाय। अग्निं वै सृष्टं प्रजापतिस्तं शम्याग्रे समैन्द्ध[3]। यच्छमीमयानि भवन्ति स्वयैवैनं समिधा समिन्द्धे। अश्वो वै भूत्वाग्निर्देवेभ्यो ऽपाक्रामत्। स यत्रातिष्ठत्तदश्वत्थः समभवत्। तदश्वत्थस्याश्वत्थत्वम्। यदाश्वत्थानि भवन्ति यदेवास्य तत्र न्यक्तं तत्तैः संभरति। अग्निर्वै मनुष्यैर्देवेभ्यो ऽपाक्रामत्। तं देवा अमन्यन्तायं वावेदं भविष्यतीति। तस्य मरुत स्तनयित्नुना हृदयमाच्छिन्दन्[4]। सा दिव्याशनिरभवत्। यद्वृक्षस्याशनिहतस्य भवन्ति[5] यदेवास्य तत्र न्यक्तं तत्तैः संभरति। पर्णमयानि पञ्चथानि[6] भवन्ति पाङ्क्तत्वाय ॥७॥ Cf. KS. VIII, 2; MS. I, 6, 3; TB. I, 1, 3.

अष्टसु प्रक्रामेषु[7] ब्राह्मणेनाधेयः। अष्टाक्षरा गायत्री। गायत्रच्छन्दा ब्राह्मणः। स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते[8]।

---

1. In Prof. Caland's copy the sentence is wrongly placed after तदाप्नोति in line 11. My Lahore copy omits it altogether.
2. Kap. ms. puts the passage after अन्न एवोर्जं दधाति in line 13.
3. The ms. शमयत्.
4. The ms. आछृंदं.
5. Schroeder's भवति to be corrected.
6. The ms. पंचथानि.
7. KS. अष्टासु प्रक्रमेषु. Kap. uses both प्रक्रम and प्रक्राम.
8. The meaning is not clear. The emendation is tentative.

यथा पिता पुत्रं जिन्वत्येवमेनं[1] स्वं छन्दो जिन्वति । एकादशसु प्रक्रामेषु[2] राजन्येनाधेयः । एकादशाक्षरा त्रिष्टुप् । त्रिष्टुप्छन्दा राजन्यः । स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते[3] । यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो जिन्वति । [द्वादशसु प्रक्रामेषु[2] वैश्येनाधेयः । द्वादशाक्षरा जगती । जगच्छन्दा वैश्यः । स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते । यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो जिन्वति[4] ।] अपरिमितमवरुणधा इति[5] वा अग्निमाधत्ते । अपरिमित आधेयो ऽपरिमितस्यावरुद्धचै । यावति चक्षुषा मन्येत तावत्यादधीत । सत्यं वै चक्षुः । सत्य एवैनमाधत्ते । पूर्वाह्ण आधेयः । एतद्वै पुण्याहम् । पुण्याह एवैनमाधत्ते । व्युष्टायां पुरा सूर्यस्योदेतोराधेयः । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । ताः प्राजायन्त । प्रजननायैवमाधेयः । आग्नेयी वै रात्र्यैन्द्रमहः । यदुदिते सूर्य आदधीताग्नेयाद्वर्णादियात् । यदनुदित ऐन्द्रात् । अनुदिते ऽपर आधेय उदिते पूर्वः । उभावेवेन्द्राग्न्योर्वर्णावाप्नोति । असुर्या वै रात्री वर्णेन शुक्रियमहः । शुक्रिय आधत्ते यदुदिते[6] सूर्य आधत्ते । नक्तं वा[7] अनुदितेन दिवोदितेन । दिवाधत्ते यदुदिते सूर्यं

---

The ms. reads स्वोदैनं छन्दसः पांक्तेनप्याधते. Cf. further on, and TB. I, 1, 9, 6. 7 स्वस्य छन्दसः प्रत्ययनस्त्वाय.
प्रत्ययनस् in the same word as प्रत्यनेस्. For the interchange of e and aya see Wackernagel's Altindische Grammatik, vol. I, p. 54, 1. 4 seq.—MS. क्षेण "wohnlich" : VS. TS. क्षयण, etc.

1. KS. ॰मेवैनं.
2. KS. प्रक्रमेषु.
3. The ms. स्वेवैनं छन्दसः प्राङ्नेनस्याधत्ते.
4. The passage within brackets is missing in Kap. ms.
5. The ms. ॰मवरुणधायेति.
6. KS. यः for यद्.
7. The ms. omits वा.

आधत्ते । न वै सु विदुरिव[1] मनुष्या नक्षत्रम् । मीमांसन्त इव[2] ह्युदितेन वाव पुण्याहम् । पुण्याह आधत्ते यदुदिते[3] सूर्य आधत्ते ।।

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः[4] सप्त धाम प्रियाणि ।
सप्त होत्रा अनु विद्वान्सप्त योनीरापृणस्व[5] घृतेन ।।[6]

इति यावतीर्वा अग्नेस्तन्वः । यो वा अस्य ता आदधानो वितर्षयति[7] वि ह तृष्यति । एतावतीर्वा अग्नेस्तन्वः षोढा सप्तसप्त । ता एवास्य प्रीणाति । न वितृष्यति । पूर्णया स्रुचा जुहोति । पूर्णः प्रजापतिः । प्रजापतिमेवाप्नोति ।।८।। Cf. KS. VIII, 3; MS. I, 6, 10; TB. I, 1, 4.

अङ्गिरसां त्वा देवानां व्रतेनादध इति ब्राह्मणेनाधेयः । ये वै देवानामङ्गिरसस्ते ब्राह्मणस्य प्रत्येनसोऽग्निर्वायुर्वाग्बृहस्पतिः । ततोबन्धुरस्य[8] यज्ञस्ततआयनः[8] । यतोबन्धुरेवास्य[8] यज्ञो यतआयनः[8] । तत एनं प्रतीच्छति[9] । इन्द्रस्य त्वा मरुत्वतो व्रतेनादध इति राजन्येनाधेयः । ये वै देवानां राजानस्ते राजन्यस्य प्रत्येनस इन्द्रो वरुणो धाता त्वष्टा । ततो बन्धुरस्य[8] यज्ञस्ततआयनः[8] । यतोबन्धुरेवास्य[8] यज्ञो यतआयनः[8] । तत एनं प्रतीच्छति[9] ।

---

1. The ms. विद्वै.
2. The ms. मीमांसतैव.
3. KS. यः for यद्.
4. The ms. सप्त ऋषयः.
5. KS. योनींरा°.
6. The mantra occurs here for the first time hence it is given in full. But in Kaṭh. it is read sakalapāṭhena in all the four anuvākas in which it occurs : VII, 14, here (VIII, 3) and XVIII, 4; XXXIV, 19.
7. Thus KS. The ms. वित्रुषति.
8. Schroeder does not consider ततः and यतः as compounded with the following words बन्धुः and आयनः. He is apparently mistaken.
9. The ms. °क्ष°.

मनोस्त्वा ग्रामण्यो व्रतेनादध इति वैश्येनाधेयः। मरुतो वै देवानां विशः। ते वैश्यस्य प्रत्येनसः। ततोबन्धुरस्य[1] यज्ञस्तत-आयनः[1]। यतोबन्धुरेवास्य[1] यज्ञो यतआयनः[1]। तत एनं प्रतीच्छति[2]।

इडा वै मनावासीत्। सासुरानग्निमादधानानगच्छत्। त आहवनीयमग्र आदधताथ गार्हपत्यमथौदनपचनम्[3]। तान-ब्रवीदाप्त्वा श्रियं प्रत्यवारुक्षन्पुण्या भविष्यन्ति परा [तु] भविष्यन्तीति। सा देवानग्निमादधानानगच्छत्। त ओदन-पचनमग्र आदधताथ गार्हपत्यमथाहवनीयम्[4]। तानब्रवीदा-पञ्छ्रियं[5] वीमं लोकमच्छिन्दन्पुण्या भविष्यन्ति प्रजास्त्वेषां[6] न भविष्यन्तीति। सेडैव मनोरादधात्। साब्रवीत्तथा वै[7] ते ऽग्निमाधास्यामि। यथा मनुष्या देवानुप प्रजनिष्यन्त इति। सा गार्हपत्यमग्र आदधादथौदनपचनमथाहवनीयमनयोर्लोक-योर्व्यवगृहीत्यै। ततो मनुष्या देवानुप प्राजायन्त। प्रजनना-यैवमाधेयः। अथो अनयोरेव लोकयोर्व्यवगृहीत्यै॥

प्रजापतिर्वै यदग्रे व्याहरत्स सत्यमेव व्याहरत्। एतद्वाव स त्रिर्व्याहरद्भूर्भुवः स्वरिति। एतद्वै वाचः सत्यम्। यदेव वाचः सत्यं तेनाधत्ते। भूष्णु[8] वै सत्यम्। य एवं विद्वाने-तेनाधत्ते भवत्येव। अयं वा अपरो भूरसौ पूर्वो भुवः। भूर्भुव इत्यपर आधेयः सत्यस्याननुगत्यै। भूर्भुवः स्वरिति पूर्वः।

---

1. See note 8 on last page.
2. See note 9 on last page.
3. The ms. अथाहवनीयं. Cf. the next note.
4. The ms. अथोदनपचनं.
5. Thus Schroeder. The ms. °पं श्रियं.
6. The ms. प्रजास्तेषां. KS. प्रजा तेषां and accordingly न भविष्यतीति further on.
7. KS. omits वै.
8. The ms. पूष्णो.

तत्पुरः सर्वमाप्यते । वाग्वै देवतां निरवदत । निरुदितदेवता[1] हि वै वाक् । अथ तत्सर्वं न सत्यं यद्वाचा शपते यत्प्राशूर्भवति । यां वै तां वाग्देवतां निरवदतैषा[2] वाव सा यदेता व्याहृतयः । एतद्वै वाचः सदेवम् । यदेव वाचः सदेवं तेनाधत्ते । अयं वा अपरो भूरसौ पूर्वो भुवः । भूर्भुव इत्यपर आधेयः । उभावेवैनो सहाधत्ते । एव ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधिसृज्यते । यद्द्वितीयं ज्योतिस्तदेव तत् । भूर्भुवः स्वरिति पूर्व आधेयः । उभावेवैनो सहाधत्ते । एष ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधि प्रह्वियते । अयं वावाग्निर्यो ऽयमन्तरग्निः[3] । यो ऽसौ पूर्वो असावेवैष आदित्यो यो ऽसावमुष्मादधि प्रह्वियते । यत्तृतीयं ज्योतिस्तदेव तेनाप्यते । असौ वावैष आदित्यः प्रत्यङ्ङाधीयते । तस्मादेष सर्वाः प्रजाः प्रत्यङ् । अग्निना वै देवा अन्नमदन्ति । प्रत्यग्वा अन्नमद्यते । यत्प्रत्यङ्ङाधीयते ऽन्नाद्याय । प्राचो वै देवान्प्रजापतिरसृजतापाचो ऽसुरान् । सो ऽसुरान्ब्रह्मणापानुदत । अग्निर्ब्रह्म । यत्प्रत्यङ्ङाधीयते भ्रातृव्यस्यापनुत्त्यै । इममर्धमग्निना परियन्तीममर्धमुपचरन्ति । देवानामेवार्धं परियन्ति देवानामर्धमुपचरन्ति । इमां दिशमभ्यावृत्य जुहोति । एतस्यां हि देवा दिशि । यस्यामेव देवा दिशि तां दिशमभ्यावृत्य जुहोति ॥९॥ Cf. KS. VIII, 4; MS. I, 6, 5. 13; TB. I, 1, 4. 5.

इति कपिष्ठलकठसंहितायां षष्ठो ऽध्यायः ॥

---

1. The ms. निर्ऋतिदेवता.
2. The ms. °वदत्यैषा.
3. KS. °रग्निः.

अग्निर्वै प्राङुदेतुं नोपाक्रामयत[1]। तमश्वेनोदवहन्। यत्पूर्वमुदवहंस्तत्पूर्ववाहः पूर्ववाट्त्वम्। अग्निर्वै प्रजापतिः। तस्याश्वश्चक्षुः। यदश्वं पुरो नयन्ति स्वमेव तच्चक्षुः पश्यन्ननूदेति[2]। स्तोमपुरोगा वै देवा एभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त। स्तोमादश्वः संभूतः। यदश्वं पुरो नयन्ति स्तोमपुरोगा एवैभ्यो लोकेभ्यो[3] भ्रातृव्यं प्रणुदते। अग्निं वै जातं रक्षांस्यध्रुवन्। तान्येनमभिसमलभन्त[4]। तान्यश्वेनापाहत। यदश्वं पुरो नयन्ति रक्षसामपहत्यै। अश्वो वै भूत्वा यज्ञो मनुष्यानत्यक्रामत्। तमेतमतिक्रामन्तं[5] मन्यन्ते। यदश्वमभ्यावर्तयन्ति यज्ञमेवैतद्यजमानमभ्यावर्तयन्ति। अग्निर्वा अश्वं प्राविशत्। कृष्णो भूत्वा सो ऽत्रागच्छद्यत्रैष मृगशफः[6]। तस्मादाक्रम्यः। यदश्वमाक्रमयति तमेवावरुन्द्धे। वास्तु वा एतत्। अथो अन्तर्हितमिव। तस्मान्नाक्रम्यम्[7]। इन्द्रो वै यतीन्सालावृकेयेभ्यः[8] प्रायच्छत्। तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्वं[9] प्राविशत्। तस्मादश्वः स्वं शकृदुपजिघ्रति कच्चिदृषिः[10] चाग्निं च न निरास्थामिति।

1. KS. नाक्रामयत. Kaṭh. does not use an upasarga with √ क्रम् when it governs an infinitive. Cf. Kāṭh. VIII, 9 : p. 92, l. 15 अग्निर्वा इमं लोकं नोपाक्रामयत.
2. Thus KS. The ms. तच्चक्षुरन् दयति.
3. The ms. अस्माल्लोकाद्.
4. The ms. °मभिशमलपंत.
5. KS. °द°.
6. KS. adds इव.
7. Thus the ms. KS. °क्रम्यः.
8. The ms. °वृकेभ्यः.
9. The ms. सौमि°.
10. KS. कश्चिद् for कच्चिद्. It is impossible to construe कश्चिद् with निरास्थाम् in the first person. कच्चिद is the correct reading:

अग्निं वै विभाजं नाशक्नुवन् । तमश्वेन व्यभजन् । यदश्वं पुरो नयन्त्यग्नेरेव विभक्त्यै । यौ वाव तावृषिश्चाग्निश्च ते एवैनं तद्देवते[1] विभजतः । अश्वो देयः । प्राजापत्यो वा अश्वः । यदश्वं ददाति सर्वा एवास्य[2] देवता अभीष्टाः प्रीता भवन्ति । परमा वा एषा दक्षिणा यदश्वः । यदश्वं ददाति पर्याप्त्यै[3] । वही देयः । वह्निनो वै पशवो भुञ्जन्ति । यज्ञो ऽग्नेर्वही[4] । भुनक्त्येनमग्निराहितः । हिरण्यं देयं सतेजस्त्वाय । शतमानं वीरं वा एष जनयति यो ऽग्निमाधत्ते । शतदायो वीरः । त्रिंशन्माने पूर्वयोर्हविषोर्देये । चत्वारिंशन्मानमुत्तमे [5]ऽभिक्रान्त्यै । अभिक्रान्तेन हि यज्ञस्यर्ध्नोति । आत्मा वै हविः । पवित्रं हिरण्यम् । सर्वेष्वेवैनं हविःषु पुनाति । अग्निर्वै वरुणानीरभ्यकामयत । तस्य तेजः परापतत् । तद्धिरण्यमभवत् । यद्धिरण्यमुपास्यति स्वेनैवैनं तेजसा समर्धयति । नोपास्य पुनरादधीत[6] । असितमस्य निष्खिदति क्षोधुको भवति । अग्निं वै वरुणानीरभ्यकामयन्त । आपो वरुणानीः । ताः समभवत्[7] । यदग्ने रेतो ऽसिच्यत तद्धरितमभवत् । यदपां तद्रजतम् । तस्माद्धरितरजताभ्यामुभयाहिरण्यः । यद्गर्भस्य शमलं तद्दुर्वर्णम् । तस्माद् ब्राह्मणेन दुर्वर्णं न भर्तव्यम् । शमलं हि तत् । [8]यद्धिरण्य-

---

Agni verily entered the horse......(and) the ṛṣi Synmaraśmi (also) entered the horse Therefore, the horse smells his dung (thinking) have I not thrown out the ṛṣi and the agni ?

1. The ms. तयैवैनं तद्देवते.
2. KS. adds तेन.
3. The ms. पर्याप्ती.
4. The ms. °र्वेहो.
5. The ms. ति°.
6. The ms. °द्दीत.
7. KS. reverses the order : तास्समभवदापो वरुणानीः.
8. यद् is to be supplied in KS.

मुपास्यति स्वेनैवैनं रेतसा समर्धयति ॥१॥ Cf. KS. VIII, 5; MS. I, 6, 4.

सह वा इमा अग्नेस्तन्वः। इयमोदनपचनो ऽन्तरिक्षं गार्हपत्यो द्यौराहवनीयः। यो वा अस्यैता अव्याकृत्याधत्ते[1] न पाप्मना व्यावर्तते घातुको[2] ऽस्य रुद्रः पशून्भवति। ता[3] एवै-त[4]द्व्याकृत्य[5] यथायोनि प्रतिष्ठाप्याधत्ते वि पाप्मना वर्तते ऽघातुको[6] रुद्रः पशून्भवति। द्यौर्मह्नासीति महानग्निमाधाय भवति। भूमिर्भूम्नेति श्वःश्वो भूयान्भवति[7]। तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नपत्यायादध इत्यन्नादमेवैनमन्नाद्यायान्न-पत्यायाधत्ते[8]। अत्त्यन्नं य एवं विद्वानग्निमाधत्ते। आयं गौः पृश्निरक्रमीदित्येताः सर्पराज्ञ्या ऋचः। इयं वै सर्पराज्ञी। अन्नं सार्पराज्ञम्। अन्नाद्यायाग्निमाधत्ते। अत्त्यन्नं य एवं विद्वानग्निमाधत्ते। वसन्तो वा इमाः प्रजा उपरुणद्धि ग्रीष्माय। ग्रीष्मो वर्षाभ्यः। वर्षाः शरदे। शरद्धेमन्ताय। हेमन्तः शिशिराय। शिशिरमग्नये। अग्निर्यजमानाय[8]। अत्त्यन्नं य एवं विद्वानग्निमाधत्ते॥

अजो देयः सयोनित्वाय। वासो देयम्। सर्वदेवत्यं वासः। देवतानामभीष्ट्यै। वर्धमाना दक्षिणा देया। दक्षिणाया वै वृद्धिं यजमानो ऽनुवर्धते। उपाहरन्ती दक्षिणा देया। धेनुर्वा उपाहरन्ती। उप ह्येषा पय आहरति। नास्याग्निमादधानस्य कनीयो भवति। धेनुं होत्रे दद्यादाशिषामवरुद्ध्या अनड्वाह-

1. The ms. ०ताव्याक्लिप्याधत्ते.
2. KS. घातको to be corrected.
3. Before ता KS. inserts यदेतैरुपतिष्ठते.
4. KS. एवास्यैत०.
5. The ms. ०व्याक्लृप्स्य.
6. KS. ऽघातको ऽस्य.
7. The ms. वसीयान्.
8. KS. adds अन्नाद्यायाग्निमाधत्त.

मध्वर्यवे । वह्वचेव यज्ञस्यावरुन्द्धे । रथो देयः । देवरथो वा एष प्रयुज्यते यद्यज्ञः । मनुष्यरथेनैव देवरथमभ्यातिष्ठति । मिथुनौ गावौ देयौ मिथुनस्यावरुद्धचै । षड् देयाः । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठति । द्वादश देयाः । द्वादश मासाः संवत्सरः । संवत्सरस्याप्त्यै । यदि द्वादशातिप्रच्यवेत चतुर्विंशतिं दद्यात् । चतुर्विंशत्यक्षरा गायत्री । गायत्री यज्ञमुखम् । गायत्रीमेव यज्ञमुखं नातिक्रामति ॥२॥ Cf. KS. VIII, 6. 8.

त्रीणि हवींषि भवन्ति । त्रय इमे लोकाः । इमानेव लोकानाप्नोति । त्रिर्विराड् व्यक्रमत[1] । विराज एवैनं विक्रान्तमनु विक्रमयति । यत्पवमानं[2] पुनात्येवैनं तेन । यत्पावक[3]मन्नमेवास्मै तेन प्रयच्छति । यच्छुचये मेध्यमेवैनं[4] यज्ञियं तेन करोति । पशुमानसानि प्रजावानसानि तेजस्व्यसानीति वा अग्निमाधत्ते । प्राणो वै पवमानः[5] । प्राणादधि पशवः प्रजायन्ते । यदग्नये [6]पवमानाय पशूनेवास्मै तेन प्रजनयति । आपो वै पावकाः । अद्भ्यः प्रजाः प्रजायन्ते । यदग्नये पावकाय प्रजामेवास्मै तेन प्रजनयति । असौ वा आदित्यः शुचिः । एष तेजसः प्रदाता । यदग्नये शुचये ऽसावेवास्मा आदित्यस्तेजः प्रयच्छति । देवाश्च वा असुराश्च संयत्ता आसन् । सो ऽग्निर्विजयमुपयत्सु[7] त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयम् । यदेतानि हवींषि निरुप्यन्ते ता एवा-

---

1. The ms. व्यक्रमयते. See the second note in the next section.
2. The ms. यत्पा०. Cf. TB. I, 1, 5 यदग्नये पवमानाय निर्वपति पुनात्येवैनम्.
3. KS. adns अन्नं वै पावकम्.
4. KS. शुचिमेवैनं मेध्यं.
5. The ms. पवमानाः. So also in sec. 5.
6. The ms. पा०.
7. The ms. विजयत्सु. Cf. Kap. VIII, 3 देवा विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत.

स्यैतत्तन्वः संभरति। [सतनूरेवैतत्सतेजा आधीयते। इमे वै लोका एतानि हवींषि। ना] नाबर्हींषि भवन्ति। इमानेव लोकानाप्नोति[1]। यन्नानाबर्हींषि[2] लोकं प्रजननाय। नोच्छिनष्टि[3]। ऊनं वै प्रजा उपप्रजायन्ते। समानबर्हिषी उत्तरे कार्ये। लोकमेव प्रजननायाकः। तमुपप्रजायते। विद्म वा अमुं[4] लोकं विद्मइमं नामुं पश्यामो वा[5] न वा। तस्मात्समानबर्हिषी उत्तरे कार्ये। पशवो वा एतानि हवींषि। घृतं पुरोडाशः[6]। रुद्रोऽग्निः। यदग्नोऽनुनिर्वपेद्रुद्राय पशूनपिदध्यादपशुः स्यात्। संवत्सरेऽनुनिरुप्याणि[7]। संवत्सरेणैवैनं शमयति। शिथिलं वा एतद्यज्ञस्य क्रियतेऽसयोनि यत्संवत्सरेऽनुनिर्वपति। अग्न एवानुनिरुप्याण्यशिथिलत्वाय[8] सयोनित्वाय ॥३॥ Cf. KS. VIII, 8.

निरुप्तं हविरुपसन्नमप्रोक्षितं भवति। अथ मध्याधिदेवनमवोक्ष्याक्षान्न्युप्य

निषसाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः[9] ॥

इति मध्याधिदेवने जुहोति। त्रिर्वै विराड् व्यक्रमत[10] गार्हपत्यमाहवनीयं मध्याधिदेवनम्। विराज एवैनं विक्रान्त-

---

1. KS. आपृणाति.
2. KS. adds स्युः.
3. KS. नोच्छिंष्येत्.
4. KS. इमं.
5. KS. adds तु.
6. KS. ०शाः in the second section.
7. The ms. ननुरुप्याणि. KS. ऽनुनिरुप्यं.
8. The ms. अननुरुप्याणम०. KS. ०निरुप्यम०.
9. Kap. gives the mantra in full, for it occurs here for the first time.
10. The ms. व्यक्रमयत्.

मनुविक्रमयति । प्रत्येव तिष्ठति । गच्छति प्रतिष्ठाम् । धर्मधृत्या जुहोति । धर्मधृतमेवैनं करोति सवितारं धारयितारम् । गां घ्नन्ति । तां विदीव्यन्ति[1] । तां समासद्भ्य उपहरन्ति । तेनास्य सो ऽभीष्टः प्रीतो भवति ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥

इत्यामन्त्रणे जुहोति मन्त्रवत्या वैश्वदेव्या । मन्त्रमेवास्मै गृह्णाति । तमभिसमत्य मन्त्रयन्ते । सह वै देवाश्च मनुष्या-श्चौदनपचन आसन् । ते मनुष्या देवानत्यचरन् । तेभ्यो देवा अन्नं प्रत्युह्य गार्हपत्यमभ्युदक्रामन् । तांस्तस्मिन्नन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । [तेभ्यो देवाः] पशून्प्रत्युह्या-हवनीयमभ्युदक्रामन् । तांस्तस्मिन्नन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रामन् । तांस्तस्यामन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवा विराजं प्रत्युह्यामन्त्रणमभ्युदक्रामन् । तांस्ततो नानु-प्राच्यवन्त । एते वै देवानां संक्रामाः[2] । श्रेयांसंश्रेयांसं लोक-मभ्युत्क्रामति य एवं वेद । एतद्वै देवानां सत्यमनभिजितं यदामन्त्रणम् । तस्मात्सुप्रातरामन्त्रणं गच्छेत् । सत्यमेव गच्छति । तस्मादा[3]मन्त्रणं[4] नाहूत यायात्[5] । तस्मादामन्त्रणे नानृतं वदेत् । वह्निर्वै नामौदनपचनः । आस्य वह्निर्जायते य

1. KS. ०न्ते. Cf. Patañjali on Pāṇini II, 3, 60 and Schroeder's Introduction to MS. p. XVII.
2. KS. संक्रमाः.
3. The ms. यदा०.
4. For āmantraṇa see ĀpDh, II, 2, 5, 4 तस्य पुरस्तादावसथस्तदामन्त्रण-मित्याचक्षते See Prof. Caland's note in Wien. Zeit. K. M., vol. XXIII pp. 59-60.
5. KS. नाहुत एयात्. The Kap. means : one should not go unless invited.

एवं वेद । गृहा गार्हपत्यः । गृहवान्भवति य एवं वेद । धिष्ण्या आहवनीयः । उपैनं यज्ञो नमति य एवं वेद । सप्रथा मध्याधिदेवनम् । प्रथते प्रजया च पशुभिश्च य एवं वेद । अनाप्त आमन्त्रणम् । नैनमाप्नोति य ईप्सति य एवं वेद ॥४॥

Cf. KS. VIII, 7.

अग्निर्वा इमं लोकं नोपाकामयत । यदस्मिन्नामं मांसं पचन्ति यत्पुरुषं दहन्ति यत्स्तेयं पचन्ति तदभीमं लोकं नोपाकामयत । स यदिमं लोकमुपावर्तत या अस्य यज्ञियास्तन्व आसंस्ताभिरुदक्रामत् । ता एताः पवमाना पावका शुचिः । तस्य या पवमाना तनूरासीत्पशूंस्तया प्राविशद्या पावकापस्तया प्राविशद्या शुचिरमुं तयादित्यं प्राविशत् । प्राणो वै पवमानः[1] । प्राणेन पशवो यताः । यदग्नये पवमानाय पशूनेवास्मै तेन यच्छति । एषा वा अस्य सा तनूर्या[2] पशून्प्राविशत् । यदिदं घृते हुते [3]प्रतीवार्चिरुज्ज्वलत्येषा वा अस्य सा तनूर्यापः[2] प्राविशत् । यदिदमप्सु परीव ददृशे यद्धस्ताववनिज्य स्नात्वा श्रदिव धत्ते य एवाप्स्वग्निः स एवैनं तत्पावयति स स्वदयति । यदग्नये पावकाय सपशुमेवैनं पावयति । एषा वा अस्य सा तनूर्यापः[2] प्राविशत् । यदिदं घृते हुते शोणमिवार्चिरुज्ज्वलत्येषा वा अस्य सा [2]तनूर्यामुमादित्यं प्राविशत् । यदिदमुपरिष्टाद्वीव भाति यज्ज्योतिरभवद्यदग्नये शुचय आविर्भूत्या एव[4] घोषायैव श्लोकायैव रुच एव । एषा वा अस्य सा तनूर्या[2]मुमादित्यं प्राविशत् । यदिदं घृतं हुते सुवर्णमिवार्चिरुज्ज्वलति

1. The ms. पवमानाः. So also in VII, 3.
2. KS. तनूर्यया for तनूर्या.
3. The ms. प्रतीचा॰. Cf. further on यदिदमुपरिष्टाद्वीव भाति.
4. The ms. आविर्भूत्यायैव. (correct ॰येव). But this retaining of final य् is rare. Very probably it is due to the following घोषायैव and श्लोकायैव.

यदेतानि हवींषि निरुप्यन्ते[1] सतनूरेवैतत्सतेजा आधीयते। इमे वै लोका एतानि हवींषि। नानाबर्हींषि भवन्ति। नाना हीमे लोकाः प्रतिष्ठिताः ॥५॥ Cf. KS. VIII, 9.

गायत्रीः संयाज्या भवन्ति। गायत्रो वा अग्निर्गायत्रच्छन्दाः। आग्नेयमेतत्क्रियते यदग्न्याधेयम्। अग्नावेवैतदग्निः प्रतितिष्ठन्नेति यदाग्नेयानि हवींषि। अग्निनाग्निः समिध्यत इत्युत्तरयोर्हविषोरनुवाक्यां कुर्यात्तेजस आयतनाय। उर्वशी देवी[2] पुरूरवस्यासीत्। सान्तर्वती देवान्पुनः परैत्। सो ऽदो[3] देवेष्वायुरजायत। तामन्वागच्छत्। तां पुनरयाचत। तामस्मै न पुनरददुः। तस्मा आयुं प्रायच्छन्नेष आयुरिति। अग्निं चोख्यम्। उखायां समुप्यैतमाधत्स्व तेन प्रजनिष्यस इति। स वृक्षस्य शाखायामग्निमासज्यायुना ग्राममभ्यवैत्। स पुनरैमीत्येद्वृक्षस्याग्रे[4] ऽग्निं ज्वलन्तम्। सो ऽचिकेदयं वाव[5] सो ऽग्निरिति। तस्यारणी आदायाग्निं मथित्वाधत्त। तेन प्राजायत। यदारोहस्यारणी भवतः प्रजननाय। अदित्यै घृते चरुं पशुकामो ऽनुनिर्वपेत्। इयं वा अदितिः। अस्यामधि पशवः

---

1. KS. adds ता एवास्यैतत्तन्वस्संभरति.
2. KS. वै.
3. The ms. ज्ञो.
4. So also the Kāṭh. mss. Schroeder, however, changed एद् to ऐद् which is wrong. The substantive अग्निं followed by the participle ज्वलन्तं in the accusative is governed by आ (एद् being composed of आ and इत्), which is repeated from the previous ऐमि. Cf. ŚatBr. II, 2, 3, 3 पुनरैम इति देवा एदग्निं तिरोभूतम्. In all instances where एद् is used, it is always to be reduced to आ and इत्, and this आ is invariably the repetition of a previous आ compounded with the root इ 'to go'. B. Delbrück takes एद् as one particle and compares it with Latin en (Altindische Syntax). See also Prof. Caland's Introduction to Kāṇ. ŚatBr. p. 35.
5. The ms. वावा. So also a KS. ms.

प्रजायन्ते । यज्ञमुखमग्न्याधेयम् । यज्ञमुखमेवालभ्य पशूनवरुन्द्धे । चातुष्प्राश्यो भवति । आचतुरं हीमे पशवो द्वन्द्वं मिथुनाः । ते वीर्यकृतः । अग्नीषोमीयमेकादशकपालं ऽनुनिर्वपेत् । आग्नेयो वै ब्राह्मणः । देवतया सोमराजा । यज्ञमुखमग्न्याधेयम् । यज्ञमुखमेवाक्रम्य स्वाराज्यमुपैति । देवान्वै यज्ञो नाभ्यनमत् । ते ऽश्राम्यन्यज्ञो नो नाभिनमनीति । सो[1] ऽग्नीषोमावेवाग्रे यज्ञो ऽभ्यनमत् । ते ऽविदुरग्नीषोमौ वै नो ऽग्रे यज्ञो ऽभ्यनांस्तयोर्यज्ञस्याभिनतिमिच्छामहा इति । ते ऽब्रुवन्युवां वै नो ऽग्रे यज्ञों ऽभ्यनान्युवयोर्नो[2] ऽधि यज्ञो ऽभिनमत्विति । तावब्रूतां[3] वार्यं वृणावहा आवामेवाग्र आज्यभागौ यजानिति । तस्मादग्नीषोमावेवाग्र आज्यभागौ यजन्ति । वार्यंवृतं ह्यनयोः । यदग्नीषोमीयमनुनिर्वपति यज्ञस्याभिनत्यै । अतो हि देवानग्रे यज्ञो ऽभ्यनमत् । यदन्यदनुनिर्वपेद्देवतया यज्ञमन्तर्दध्यात् । मिथुनं वा अग्निश्च सोमश्च । सोमो रेतोधा अग्निः प्रजनयिता । अग्निर्वाविदं सर्वम् । आप ओषधयो वनस्पतयः । तदेव सोमः । एतौ वै नो देवानां नेदिष्ठम् । एतौ हि पश्यामः । यथा वा इदं मनुष्या उपासत एवमेतं देवा उपासत । ते ऽचिकयुरुद्धृतेन वा[4] अनेनाभिजयेमेति । तमुदहरन्त । तेनाभ्यजयन् । अभिजित्या एवैष उद्ध्रियते । अग्निर्वै निराधानादबिभेत् । नातिदूर आधेयो निराधानाय ॥६॥ Cf. KS. VIII, 10; MS. I, 6, 12.

आधेयो ऽग्नी३[5]र्नाधेया३[5] इति मीमांसन्ते । श्वो ऽग्निमाधास्यमानेनेति । आधेय[6] एव । अयज्ञो ह्येष यो ऽनग्निः । अजो

1. KS. तेषाम्.
2. The ms. ऽभ्यन्नात्युभयोर्णो.
3. KS. ता अब्रुवतां.
4. KS. त्वा.
5. The ms. does not give the figure 3.
6. KS. ०मानना ३ इत्याधेय.

बद्धस्तां रात्रीं वसेत् । अग्नितेजसं वा अजः । तदेव तमग्निमाधत्ते । कल्माषः स्यात् । स हि सर्वदेवत्यः । यस्तं श्वोऽग्निमाधास्यन्स्यात्स तां रात्रीं व्रतं चरेत् । न मांसमश्नीयात् । न स्त्रीमुपेयात् । सर्वो वै पुरुषो ऽग्निमान् । अग्निरस्मादपक्रामेत् । एष ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधि सृज्यते यस्तमुद्धरति । यो दक्षिणो ब्रह्मवर्चसायैवैष मथ्यते । अथो अग्निभ्यामेवैनं सयोनिं करोति । दुर्गोपस्तु । अहरहरस्य मन्थेयुः । यत एव कुतश्चाहरेत् । एषा वा अस्यानवरुद्धा तनूः । तामेवावरुन्द्धे । यत्र दीप्यमानं परापश्येत्तत आहरेत् । देवता वा एता आविर्भवन्ति । ता एवावरुन्द्धे । [1]भृज्जनादाहरेदन्नकामस्य । एषा वा अस्यान्नादी तनूः । तामेवावरुन्द्धे । यो ब्राह्मणो वा वैश्यो वा पुष्टो ऽसुर इव[2] स्यात्तस्य गृहादाहरेत् । यैव सा पुष्टिर्यदन्नं तदवरुन्द्धे । गृहे त्वस्य[3] ततो नाश्नीयात् । त्रिरुद्यच्छते । त्रय इमे लोकाः । इमानेव लोकानाप्नोति । यदुद्यच्छत इमं तेन लोकमाप्नोति । यत्प्राङुद्द्रवत्यन्तरिक्षं तेन । यदादधात्यमुं तेन । नाधाय पुनरुद्गृह्णीयात् । अपक्रमः सः । पापीयान्भवति । प्राणेभ्यो वै प्रजापतिः प्रजा असृजत । ताः प्राजायन्त । तया मात्रयोद्गृह्णीयात्प्रजननाय । नात्युद्गृह्णीयात् । अग्निरस्य प्राणानुद्दहेत्प्रमीयेत । नाधो दध्नुयात् । अपक्रमः सः । पापीयान्भवति ॥७॥ Cf. KS. VIII, 12; MS. I, 6, 11.

अग्निं वै सृष्टमग्निहोत्रमन्वसृज्यत । तस्मादग्निमाहितमग्निहोत्रेणानूद्द्रवन्ति । आग्नेयी सायमाहुतिः सौरी प्रातः । यदाग्नेय्या प्रातर्जुहुयात्प्रजननं पुरस्तात्परिहरेत् । अयथापूर्वं

---

1. The ms. भृज्यमानादा॰.
2. The ms. एव.
3. The ms. न्वस्य.

कुर्यात् । पूर्णया स्रुचा मनसा प्रजापतये जुहोति । पूर्णः प्रजापतिः । प्रजापतिमेवाप्नोति । पूर्णो वै प्रजापतिः समृद्धिभिरूनो व्यृद्धिभिः[1] । पूर्णः पुरुषः कामैरूनः समृद्धिभिः[2] । पूर्णेनैव पूर्णः[3] समृद्धीरवरुन्द्धे । आनीता वा अन्येषां देवानां स्मो ऽनानीता अन्येषाम् । संस्पर्शेनान्येषां जीवामः सकाशेनान्येषाम् । पृथिव्या वातस्यापां तेषामानीताः स्मस्तेषां संस्पर्शेन जीवामः । अग्नेः सूर्यस्य दिवस्तेषामनानीताः स्मस्तेषां सकाशेन जीवामः। तानेवैतदालब्ध[4]। त [5]एनमानेषत। श्रेयसो व्रातस्य भवति। नास्य मनुष्याः पापवसीयसस्येशते। यदात्मनालभेत प्रमायुकः स्यात्। आज्येन चौषधीभिश्चालभते ऽप्रमायुको भवति। आनीतो वा एष देवानां य आहिताग्निः। अदन्त्यस्यान्नम्। पूर्णया स्रुचा जुहोति। पूर्णयाग्नये ऽलमकः। अलमस्मै भवति। ओषधयश्च वै वनस्पतयश्च दिवा समदधुः। त इतो ऽन्यत्सर्वमबाधन्त। स प्रजापतिरमन्यतेमे वावेदमभूवन्निति। सो ऽग्निं सृष्ट्वा तमाधत्त। तेनैनान्न्यभावयत्। भ्रातृव्यसहनो वावैष आधीयते हुताद्याय[6]। एष वा अहुताद्यो ऽलमग्न्याधेयाय सन्ननाहिताग्निः। हुतमेवैतेन स्वदितमत्ति ॥८॥

Cf. KS. VIII, II.

इति कपिष्ठलकठसंहितायां सप्तमो ऽध्यायः

---

1. The ms. वियृध्यति.
2. The ms. समृद्ध्यति.
3. Thus the ms. KS. पूर्णयैव पूर्णाः.
4. The ms. तानेवतदालभ्य.
5. The ms. तयेन०. This sandhi is rare.
6. The ms. भ्रातृव्यसहनाय यावावैषाधीयते आहुताद्या वा वावैषाधीयत.

अहुतादो वा एतस्य पुरा देवाः । अथैतद्धुताद उपावर्तंते । ते ऽस्योर्जापक्रामन्ति । ऊर्जमेवावरुन्द्धे । तानेव भागिनः करोति । यजन्त्यमुष्मिञ्जुह्वत्यस्मिन्पचन्त्यमुष्मिन्ननन्तरयायैतस्य[1] । अथो[2] वैश्वानरतायामेवैनमुपातिष्ठिपत् । ये वै यज्ञेनायजन्तार्ध्नुवंस्ते । न वै सु विदुरिव मनुष्या यज्ञम् । तस्मान्न सर्व इवर्ध्नोति । यद्दक्षिणां ददाति यज्ञस्यार्धः[3] । दक्षिणावद्ध्र्याः ह स्म वै पुरा [4]दर्शपूर्णमासाभ्यां यजन्ते । य एष ओदनः पच्यते दक्षिणामेवैतां ददाति यज्ञस्यर्द्ध्यै । इष्टी वा एतेन यद्यजते । य एष ओदनः पच्यते तेन पूर्ती । एष वावेष्टापूर्ती य एतं[5] पचति । प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशत् । यज्ञमेव सो ऽमन्यतात्मानमन्तरगामिति । स एतमोदनमपश्यत् । तमात्मने भागमकल्पयत् । प्रजापतेर्वावैष भागः । महान्तमपरिमितं पचेत् । अपरिमितः प्रजापतिः । प्रजापतिमेवाप्नोति । देवाश्च वा असुराश्चास्पर्धन्त । ते[6] देवाः प्रजापतिमेवाभ्ययजन्त । अन्यो ऽन्यस्यासन्नसुरा अजुहवुः । ते देवा एतमोदनमपश्यन् । तं प्रजापतये भागमनुनिरवपन् । तं भागं पश्यन्प्रजापतिर्देवानुपावर्तत । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वानन्वाहार्यमाहरति भवत्यात्मना परास्य भ्रातृव्यो भवति । ईडचा वा अन्ये देवाः सपर्येण्या अन्ये ।

---

1. The ms. °ननंतरतायैतस्य.
2. The ms. असौ.
3. This sentence is not found in KS.
4. The ms. °पौ°.
5. The ms. एवं.
6. The ms. omits ते.

देवा ईड्या ब्राह्मणाः सपर्येण्याः । यज्ञेनैवेड्यान्प्रीणात्यन्वाहार्येण सपर्येण्यान् । तस्योभये प्रीता यज्ञे भवन्ति । प्रजापतेर्भागो ऽस्यूर्जस्वान्[1] । अक्षितो ऽस्यक्षित्यै त्वा । अक्षितो नामासि मा मे क्षेष्ठाः । प्राणापानौ मे पाहि[2] । उदानरूपे मे पाहि । ऊर्गस्यूर्जं मयि धेहि । प्रजापतिं त्वया समक्षमृध्यासमिति तमेव समक्षमृध्नोति ॥१॥ Cf. KS. VIII, 13.

यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे[3] ।
आदित्या विश्वे तद्देवा वसवः पुनराभरन् ॥
यत्त्वा[4] क्रुद्धः परोवप मन्युना यदवर्त्या ।
सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुधीतिमग्ने[5] ।
इहैव धेह्यधि दक्षमुग्रमश्वावद्गोमद्यवमत्सुवीर्यम् ॥
पुनस्त्वा मित्रावरुणौ पुनरिन्द्रः पुनर्भगः ।
पुनस्त्वा विश्वे देवा ब्राह्मणा उददीदिपन् ॥
पुनरूर्जा निवर्तस्व[6] पुनरग्न इषायुषा ।
पुनर्नः[7] पाह्यंहसः ॥
सह रय्या निवर्तस्वाग्ने[6] पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

केतः सकेतः सुकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । सलिलः सलिगः सगरस्ते न आदित्या जुषाणा

1. KS. adds पयस्वान्.
2. KS. adds समानव्यानौ मे पाहि.
3. The ms. ०दघ्मसे.
4. KS. यत्ते.
5. KS. ०धीतमग्ने.
6. The ms. निर्व०.
7. The ms. पुनर्णः.

अस्य हविषो व्यन्तु स्वाहा । दिवो ज्योतिर्विवस्व[1] आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वम् । आदित्येभ्यः स्वाहा ॥२॥ Cf. KS. VIII, 4. 6; KS. VIII, 14; IX, 1. 3; MS. I, 7, 1. 4. 5; TS. I, 5, 3. 4.

अग्नेर्वै भागः पुनराधेयम् । तं[2] भागं प्रेप्सन्व्यर्धयति । यद्याधाय मन्येत व्यृध्यते स्य इति[3] पुनरादधीत । यं भागं प्रेप्सन्व्यर्धयति तं प्राप्यार्धयत्येव । सर्वमाग्नेयं क्रियते । यदेव किंच सर्वमग्नये भागं प्रादात्सर्वामृद्धिमृध्नोति । न संभाराः संभृत्या इत्याहुर्न यजुः कार्यमिति । संभृतसंभारो ह्येष कृत-यजुः । तत्तन्न सूक्ष्यम् । संभृत्या एव संभाराः कार्यं यजुः । पुनरुत्स्यूतं वासो देयं पुनरुत्सृष्टो ऽनड्वान्पुनर्निष्कृतो रथः । एतानि वै पुनराधेयस्य रूपाणि । रूपैरेवैनत्समर्धयति । अग्निर्वा उत्सीदन्नप ओषधीरनूत्सीदति । एता वा आप[4] ओषधयो

1. KS. ज्योते विवस्त्र But in IX, 3 KS. agrees with Kap. Cf. MS. देवजूते विवस्वन्.
2. The ms. omits तं. Cf MS.
3. The ms. आस्येति. KS. ऽस्या इति. स्यः with the verb in the third person is equivalent to अहं. The lengthening स्या MS. in यद्यादधानो मन्येत त्रि स्या ऋध्यता इत्युत्साद्य पुनरादधीत is inexplicable. This use of the pronoun त्यद् is very common in the Jaiminīya Brāhmaṇa and very often the sentence expresses unfavourable circumstances. In KS. MS. and TS. quite a number of such instances can be noted : KS. XXIII, 2 (p. 75, 1, 1); XXIV, 9 (p. 100, 1. 5); MS. III, 6, 4 (p. 63, 1. 17); TS. II, 5, 2, 6; II, 6, 6, 1. An interesting interchange of अस्मद् and त्यद्, similar to the one observable in Pañcaviṃśa and Jaiminīya Br. is met with in Mait. and Kāṭh. Saṃhitās : अस्ति वा इदं त्यस्मिन्नन्तर्वीर्यम् MS. II, 4, 3 (p. 40, 1. 19) as against वीर्यं वा इदं मय्यस्ति KS. XII, 3 (p. 164, 1. 16). For Jaim Br. passages see Prof. Caland's paper "Over en uit het JaimBr." in Versl. en Med. 5, 1, 1. This use of त्यद् is restricted to the Brāhmaṇas.
4. KS. आप एता.

यद्दर्भाः । यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्यो ऽध्यवरुन्द्धे ॥

देवाश्च वा असुराश्चास्पर्धन्त । ते देवा विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत । यदि जयेमेमा उपावर्तेमहि यदि नो जयेयुरिमा अभ्युपधावेमेति । ते ऽभिजित्यान्वैच्छन्सर्वेषां नः सहेति । सो ऽग्निरब्रवीद्यो मा मद्देवत्यमादधातै स[1] एताभिस्तनूभिः संभवादिति । तं देवा आदधत । त[2] एताभिस्तनूभिः समभवन् । एताभिरेव तनूभिः संभवति य एवं विद्वानेतमाधत्ते । त्वष्टा पशुकाम आधत्त । त[2] इमे त्वाष्ट्राः पशवः । तेनर्द्धाः । मनुः पुष्टिकाम आधत्त । स इमान्पोषानपुष्यत् । तेनर्द्धाः । प्रजापतिः प्रजाकाम आधत्त । ता इमाः प्राजापत्याः प्रजाः प्राजायन्त । तेनर्द्धाः । यो वै तमाधत्त स तेन वसुना समभवत् । तस्मात्पुनर्वसुः । तस्मात्पुनर्वसावाधेयः । आर्ध्नोद्वै स यस्तमाधत्त । तस्मादनूराधाः । तस्मादनूराधास्वाधेयः ॥३॥

Cf. KS. VIII, 15; MS. I, 7, 2; TS. I, 5. 1. 2.

अग्निर्वा उत्सीदन्संवत्सरमनूत्सीदति । सप्तदश सामधेनीः कार्याः । पञ्चर्तवः । द्वादश मासाः । एष वाव स[3] संवत्सरः । संवत्सरादेवाधि यज्ञमुखं प्रतनुते[4] । तदाहुः पञ्चदशैव कार्या न सप्तदशेति । एतद्धि संवत्सरस्य संक्रमणतरं यत्पञ्चदश । पञ्चदश सामिधेनीरनूच्यन्ते । पञ्चदशार्धमासस्य रात्रयः । ताभिरेव ता आप्यन्ते । यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि । तैरेव तान्याप्यन्ते । अग्निर्वा उत्सीदन्संवत्सरमनूत्सीदति । षड्वा ऋतवः संवत्सरः ।

---

1. The ms. °दधाति तत.
2. The ms. omits त.
3. The ms. सु-.
4. KS. संवत्सरादेवैनमध्यवरुन्द्धे.

यत्षड्विभक्तयः संवत्सरादेवैनमध्यवरुन्द्धे । संवत्सरो वा अग्निर्वैश्वानरः । षड्तवः । तस्मात्षड्विभक्तयः यद् द्व्यक्षराः सतीश्चतुरक्षराः क्रियन्त आचतुरं हीमे पशवो द्वन्द्वं मिथुनाः। यद्वा इदमग्निं बहुधा विहरन्ति यदिमान्पोषान्पुपोष तस्मादग्निरेवैतावतीर्विभक्तीरश्नुते नान्या देवता। यज्ञमुखं वै प्रयाजाः। यत्प्रयाजानन्तर्याद्य[1]ज्ञमुखमन्तर्यात्[1] । अन्नं वै प्रयाजाः । यत्प्रयाजानन्तर्याद[1]न्नमन्तर्यात्[1] । यः कामयेतर्ध्नुयामित्युपरिष्टात्प्रयाजानां[2] विभक्तीः कुर्यात्। वीर्यं वै विभक्तयः[3]। वीर्यादेवाधि वषट्करोति । अजिरमृद्धिमभिक्रामति । नानाग्नेयं क्रियत इत्याहुः । कस्मात्सविभक्तयः प्रयाजा भवन्तीति । संवत्सरं वा एते परीज्यन्ते यत्प्रयाजाः । तेनाग्नेयं तेन नानाग्नेयं क्रियते ॥

पुनरूर्जा निवर्तस्व[4] पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥

इति पुरस्तात्प्रयाजानां जुहुयात् ।

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

इत्युपरिष्टादनुयाजानां जुहुयात् । ऊर्जा वा एष पशुभिरुत्सीदन्सहोत्सीदति । पुनरेवोर्जं पशूनवरुन्द्धे । अथो उभयत एव यज्ञस्याशिषर्ध्नोति ॥४॥ Cf. VIII, 2; KS. IX, 1; VIII, 14; MS. I, 7, 3. 4. 1.

नानाग्नेयं क्रियत इत्याहुः । कस्मादाज्यभागौ यजन्तीति। चक्षुषी वा एते यज्ञस्य यदाज्यभागौ । यदाज्यभागावन्तर्या-

1. KS. अन्तरियाव.
2. Schroeder's प्रजानां is to be corrected.
3. KS. MS. वीर्यं वै प्रयाजाः वीर्यं विभक्तयः.
4. The ms. निर्व॰.

चक्षुषी यज्ञस्यान्तर्यात् । अग्न आयूंषि पवस इत्येतां सोमस्याज्यभागस्य लोके कुर्यात् । यदाग्नेयं तेनाग्नेयी यत्पावमानं तेन सौमी । नानाग्नेयं क्रियते । न सोममन्तरेति । अग्निर्मूर्धा दिवः ककुदित्येतां सोमस्याज्यभागस्य लोके कुर्यात्प्रजाकामस्य वा पशुकामस्य वा । यन्मिथुना तेन प्रजननवती यद्रेतस्वती तेन सौमी । नानाग्नेयं क्रियते । न सोममन्तरेति ॥

वीरहा वा एष देवानां यो ऽग्निमुत्सातयते । शतदायो वीरः । यदेताः शताक्षरा अपरपङ्क्तयो वीरमेवैतद्देवानामवदयते । अन्यस्यै वै प्रमाया आधेयो ऽन्यस्यै पुनराधेयः । न वै तामाधेयेन स्पृणोति यस्यै पुनराधेयः । पुनराधेयेन वाव तां स्पृणोति । जरा वै देवहितमायुः । तावतीर्हि समा जीवति । तस्मादाहुः शतदायो वीरः[2] । यदेताः शताक्षरा अक्षरपङ्क्तयो भवन्ति यावदेव वीर्यं तदाप्नोति तत्स्पृणोति । आयुषा वा एष वीर्येण व्यृध्यते यो ऽग्निमुत्सादयते । शतायुः पुरुषः शतवीर्यः । आयुर्वीर्यं हिरण्यम् । यद्धिरण्यं शतमानं ददात्यायुरेव वीर्यं पुनरालभते[3] ॥५॥ Cf. KS. IX, 2; MS. 1, 7, 4. 5.

यज्ञेन वा एष वीर्येण व्यृध्यते[4] यो ऽग्निमुत्सादयते । पाङ्क्तो यज्ञः । यत्पञ्चकपालो यज्ञमेवालभते । तदाहुरष्टाकपाल एव कार्यो न पञ्चकपाल इति । अष्टाक्षरा गायत्री । गायत्रो ऽग्निर्गायत्रच्छन्दाः । आग्नेयमेतत्क्रियते यत्पुनराधेयम् । तस्मादष्टाकपालः । तत्तन्न सूर्क्ष्यम् । पञ्चकपाल एव कार्यः । अग्निर्वा उत्सीदन्संवत्सरमनूत्सीदति । पञ्च वा ऋतवः संवत्सरः ।

---

1. The ms. यजानीति.
2. KS. adds इति.
3. KS. पुनरालभेत is to be corrected.
4. The ms. विव्र॰.

पञ्चथाद्वा[1] अध्यृतोः षष्ठ ऋतुर्बभूव । समानमेतद्यत्पञ्चथश्चर्तुः षष्ठश्च । यत्पञ्चकपालः संवत्सरादेवैनमाप्नोति[2] । पञ्चर्तवः । प्रजननमृतवः । यत्पञ्चकपालः प्रजननाय । प्रजननं वा ऋतवो ऽग्निः प्रजनयिता । यत्पञ्चकपालः प्रजननादेवैनं प्रजनयिता प्रजनयति ॥

आदित्या वा इतः सर्वेणैव सहामुं लोकमायन् । ते व्यतृष्यन् । ते ऽविदुरमुतःप्रदानाद्वा इहाजगामेति । त एतं पुनरादधत । तेनार्ध्नुवन् । आदित्या वा अस्मिल्लोके ऋद्धा आदित्या अमुष्मिन् । पशवो ऽस्मिन्नृतवो ऽमुष्मिन् । उभयोरेव लोकयोर्ऋध्नोति य एवं विद्वानेतया यजते[3] ॥

केतः सकेतः सुकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । सलिलः सलिगः सगरस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । दिवो ज्योतिर्विवस्व आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वम् । आदित्येभ्यः स्वाहेत्येतैर्वै ते तमादधत । यदेवैतैराधत्ते ऽथाहितः । आदित्यो हि पुनराधेयः ॥६॥ Cf. VIII, 2; KS. IX, 3; VIII, 14; MS. I, 7, 4. 5. 1.

आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो द्वादशकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । मारुतः सप्तकपालः । वैश्वदेव्यामिक्षा । द्यावापृथिव्य एककपालः । आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो ऽष्टाकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्नो द्वादशकपालः । मारुत्यामिक्षा ।

वारुण्यामिक्षा । काय एककपालः ॥

नमस्त आतान । अनर्वाक्प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण ॥

---

1. The ms. पंचथाद्वा.
2. KS. ०मध्यवरुन्द्धे.
3. Thus the ms. विद्वानेतमाधत्ते.

प्रघास्यान्हवामहे मरुतो यज्ञवाहसः ।
करम्भेण सजोषसः ॥
मो षू ण इन्द्रात्र पृत्सु देवा अस्तु ष्म ते शुष्मिन्नवयाः ।
मही देवस्य मीढुषो ऽवया हविष्मतो मरुतो वन्दते गीः ॥
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
यदेकस्यापि धर्मेणीदं तदवयजामहे[1] ॥ स्वाहा ॥
अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा ।
देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥७॥ Cf. KS. IX, 4; MS. I, 10, 1. 2; TS. I, 8, 2. 3.

अग्नये ऽनीकवते प्रातरष्टाकपालः । मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः । मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनः ॥

पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥
देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारमिन्नि मे हर निहारं निहरामि ते ॥

मरुद्भ्यः क्रीडिभ्यः प्रातः सप्तकपालः पुरोडाशः । आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो ऽष्टाकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्न एकादशकपालः । ऐन्द्रश्चरुः । वैश्वकर्मण एककपालः ॥

अग्ने वेर्होत्रं वेर्दूत्यम् । ऊर्ध्वो ऽध्वरे ऽस्थाः[2] । अवतां त्वा द्यावापृथिवी । अव त्वं द्यावापृथिवी । स्विष्टकृदिन्द्राय देवेभ्यो भव । जुषाणो अस्य हविषो घृतस्य वीहि स्वाहा ॥८॥ Cf. KS. IX, 5; MS. I, 10, 1. 2; TS. I, 8, 4.

---

1. The ms. धर्मणीदंन्नदवयज्ञे.
2. The ms. अध्वरायास्वा.

सोमाय पितृमत आज्यम् । पितृभ्यो बर्हिषद्भ्यः षट्कपालः पुरोडाशः । पितृभ्यो ऽग्निष्वात्तेभ्यो धानाः । अग्नये कव्यवाहनाय मन्थः । एतत्ते तत ये च त्वानु । एतत्ते पितामह ये च त्वानु । एतत्ते प्रपितामह ये च त्वानु । अत्र पितरो मादयध्वम् ॥

सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुर स्तुतो याहि वशां अनु योजा न्विन्द्र ते हरी ॥
परेत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।
दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥
अमीमदन्त पितरः ॥
अया विष्ठा जनयन्कर्वराणि स हि[1] घृणिरुरुर्वराय गातुः ।
स प्रत्यङ्ङैद्धरुणं मध्वो अग्रं स्वा यत्तनू [2]तन्वमैरयत ॥
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥

नमो वः पितरो मन्यवे । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो व. पितरो रसाय । नमो वः पितरो बलाय । नमो वः पितरो यत्क्रूरं तस्मै । नमो नमो वः पितरः । स्वधा वः पितर । यात्र पितरः स्वधा यत्र यूयं स्थ सा युष्मासु । तया यूयं यथाविभागं मादयध्वम् । येह पितर ऊर्ग्यत्र वयं स्मः सास्मासु । तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥

मनो न्वाहुवामहे नाराशंसेन स्तोमेन ।
पितृणां च मन्मभिः ॥
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यं दृशे ।

1. The ms. omits स हि.
2. The ms. तन्वा°. The ms. has often तन्वां and वीर्यां for तन्वं and वीर्यं.

पुनर्नः पितरो मनो ददातु दैव्यो जनः ।
जीवं व्रातं सचेमहि ॥९॥ Cf. KS. IX, 6; MS. I, 10, 3; TS. I, 8. 5.

यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि यानि चकृम ॥

रुद्राखुं ते पशुं करोमि । एष ते रुद्र भागः । सह स्वस्राम्बिकया तं जुषस्व स्वाहा ॥

अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्[1] ।
यथा नो वस्यसस्करद्यथा नः श्रेयस्करद्यथा नो व्यवसाययात् ॥
भेषजं गवे ऽश्वाय पुरुषाय सुभगं[2] मेषाय मेष्यै ।
अथो अस्मभ्यं भेषजं सुभेषजं यथासति ॥
त्र्यम्बकं[3] यजामहे सुगन्धिं रयिपोषणम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

भगोऽसि । भगस्य ते लप्सीय[4] । एष ते रुद्र भागः । तेनावसेन परो मूजवतो ऽतीहि कृत्तिवासाः पिनाकहस्तो ऽवततधन्वा । एधो ऽस्येधिषीमहि । समिदसि समेधिषीमहि । तेजो ऽसि तेजो मयि धेहि ॥१०॥ Cf. KS. IX, 6. 7; MS. I, 10, 3. 4; TS. I, 8, 5. 6.

चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्नीत्[5] । वाचस्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः । इन्द्रं गच्छ स्वाहा । पृथिवी होता । द्यौरध्वर्युः । त्वष्टाग्नीत्[5] । मित्र उपवक्ता । वाचस्पते

1. The ms. अवान्व रुद्रामधिमह्यव देवं त्रियंबकं.
2. KS. MS. TS. सुगं.
3. The ms. त्रियंवकं.
4. KS. भगस्स्थ भगस्य वो लप्सीय is repeated in ApŚr. VIII, 18, 4, but ManŚr. I, 7, 7, 8 reads भगो ऽसि भगस्य लप्सीय.
5. KS. ०म्नित्.

वाचो वीर्येण संभृततमेनायक्षसे। यज्ञपतये वीर्यमा स्वस्करः। वाचस्पतिः सोमं पिबतु। जजनदिन्द्रमिन्द्रियाय स्वाहा। सोमः सोमस्य पुरोगः। शुक्रः शुक्रस्य पुरोगाः। श्रातास्त[1] इन्द्र सोमा वातापयो[2] हवनश्रुतः[3] स्वाहा। अग्निर्होता। अश्विनाध्वर्यू। रुद्रो ऽग्नीत्। बृहस्पतिरुपवक्ता। वाचस्पते हृद्विधे[4] नामन्वाचस्पतिः सोममपात्। आस्मासु नृम्णं धात्स्वाहा। सोमः सोमस्य पुरोगाः। शुक्रः शुक्रस्य पुरोगाः। श्रातास्त[2] इन्द्र सोमा वातापयो[3] हवनश्रुतः[4] स्वाहा ॥११॥ Cf. KS. IX, 8; MS. I, 9, 1.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। वरुणस्त्वा नयतु देवि दक्षिणे। यमायाश्वम्। तेनामृतत्वमशीय। वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। देवस्य त्वा[5]। वरुणस्त्वा नयतु देवि दक्षिणे। अग्नये हिरण्यम्[6]। रुद्राय गाम्[7]। ग्नास्त्वाकृन्तन्नपसो ऽतन्वत वरुत्रीरवयन्। वरुणस्त्वा नयतु देवि दक्षिणे। बृहस्पतये वासः। तेनामृतत्वमशीय। वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे॥

क इदं कस्मा अदात्। कामः कामाय। कामो दाता कामः प्रतिग्रहीता। कामः समुद्रमाविशत्। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते॥

---

1. The ms. स्थ.
2. KS. वातापे.
3. The ms. श्रच.
4. Thus KS. The ms. रिद्विधे.
5. देवस्य त्वा is the pratīka for the mantra given in the beginning of this section.
6. तेनामृतत्वमशीय। वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। देवस्य त्वा…प्रतिगृह्णामि। वरुणस्त्वा नयतु देवि दक्षिणे is understood after अग्नये हिरण्यम्.
7. तेनामृतत्वमशीय। वयो…प्रतिग्रहीत्रे। देवस्य त्वा…प्रतिगृह्णामि is understood after रुद्राय गाम्.

महाहविर्होता। सत्यहविरध्वर्युः। अचित्तपाजा अग्नीत्[1]। अचित्तमना उपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ। अयास्य उद्गाता। वाचस्पते विधे नामन्विधेम ते नाम। विधेस्त्वमस्माकं नाम। मा देवानां तन्तुश्छेदि मा मनुष्याणाम् ॥१२॥ Cf. KS. IX, 9; MS. I, 9, 4. 1.

इति कपिष्ठलकठसंहितायामष्टमो ऽध्यायः।

---

1. KS. अग्निद्.

ओम्[1] ॥

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वं सुप्रतीको विभावसुः ॥
प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ।
वृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वा प्रजाः ॥
अक्रन्ददग्निः[2] ॥
अन्नपते अन्नस्य नो [3]देह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥
समिधाग्निं दुवस्यत[4] ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥
आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने कृणुध्वं सुरभावु लोके।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्योनम्[5] ॥
अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ।
गर्भे संजायसे पुनः ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।

---

1. The ms. begins the aṣṭaka with ओं नमो श्री विनायकाय ॥
2. KS. gives the verse sakalapāṭhena, although it has already occurred in XVI, 8.9 (p. 229, II. 13-14, p. 230, II. 19-20). The Kap. pratika indicates that either one or both the sections XVI, 8.9 of Kāṭh. formed a part of Kap.
3. The ms. धे०.
4. KS. repeats the entire verse for which see Kap. VI, 2.
5. KS. स्वेनम्. See Schroeder's note on MS. स्वेनव्.

संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थे ऽन्तरस्यां शिवतमः ॥
पुनरूर्जा ॥ सह रय्या[1] ॥
बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति[2] त्वो अनु त्वो गृणाति वन्दारुस्ते[3] तन्वं वन्दे अग्ने ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः ।
युयोध्यस्मद्द्वेषांसि ॥१॥ Cf. XXXI, 2; KS. XVI, 10; XIX, 12; MS. II, 7, 10; III, 2, 2; TS. IV, 2, 3; V, 2, 2.

अपेत वीत वि च सर्पतातो ये ऽत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमो ऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥

संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् ।
अग्नेर्भस्मासि । अग्नेः पुरीषमसि । चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥

अयं सो अग्निर्यस्मिन्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्सन्स्तूयसे जातवेदः ॥
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवां ऊचिषे धिष्ण्या ये ।
याश्चावस्तादुपतिष्ठन्त[4] आपो या वा परो रोचने सूर्यस्य ॥
अग्ने यत्ते दिवि वर्चः पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥
पुरीष्यासो अग्नयः प्रावणेभिः[5] सजोषसः ।
जुषन्तां हव्यमाहुतमनमीवा इषो महीः ॥

---

1. For sakalapāṭha see VIII, 2.
2. KS. MS. निन्दति. Kap. follows ṚV. I, 147, 2.
3. KS. MS. वन्दारुं ते. Kap. agrees with ṚV. ib.
4. KS. यास्त्वा॰.
5. KS. प्रवणेन. Kap. is identical with ṚV. III, 22, 4.

इडामग्ने पुरुदंसं[1] सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥
अयं ते योनिर्ऋत्वियः[2] ॥

चिदसि । तया देवतयाङ्गिरस्वद् ध्रुवा सीद । परिचिदसि । तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥
समितं संकल्पेथां संप्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभिसंवसानौ ॥
सं वां मनांसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥
अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमां[3] असि ।
शिवाः कृत्वा दिशः सर्वाः स्वं[4] योनिमिहासदः ॥
भवतं नः समनसौ[5] ॥
मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनावभारुखा ।

तां विश्वे देवा ऋतुभिः संविदानाः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥२॥ Cf. XXXI, 3; KS. XVI, 11; XX, 1; MS. II, 7, 11; III, 2, 3; TS. IV, 2, 4. 5; V, 2, 3. 4.

यदस्य पारे रजसश्चित्रं ज्योतिरजायत ।
तन्नः पर्षदति द्विषो[6] अग्ने वैश्वानर द्युमत् ॥
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्विहि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते[7] तुभ्यमस्तु ॥

1. The ms. पुरू°.
2. KS. repeats the whole mantra. For Kap. sakalapāṭha see I, 16.
3. The ms. पुष्टिमं.
4. The ms. स्वयं.
5. KS. repeats the whole mantra. For Kap. sakalapāṭha see II, 11.
6. The ms. परिषदति द्वेषो.
7. The ms. निर्ऋति.

यत्ते अस्मिन्घोर आसन्जुहोम्येषां बन्धानामवसर्जनाय कम् ।
यां त्वा जनो भूमिरिति प्रमन्दते[1] निर्ऋतिरिति त्वाहं परि वेद विश्वतः ॥
नमः सु[2] ते निर्ऋते तिग्मतेजो ऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधि राहेयैनम् ॥
यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् ।
तं ते विष्याम्यायुषो नु मध्ये ऽधा विषितः पितुमद्धि प्रमुक्तः ॥
निवेशनः संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥
सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥
युनक्त सीरा वि युगा तनोत कृतो योनिर्वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्[3] ॥
पूषा युनक्तु सविता युनक्तु बृहस्पतिः सविता देवो अग्निः ॥
शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहान्[4] ।
शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम् ॥
लाङ्गलं पवीरवं सुशेवं सोमपित्सरु ।
उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥
घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः ।
ऊर्जो भागं मधुमत्पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व ॥
विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारम् ।
ज्योतिरापाम ॥

---

1. The ms. प्रवंधते.
2. The ms. नमस्तु.
3. So also ṚV. X, 101, 3. Devapāla (Prof. Caland's copy) also quotes पक्वमेयात्. KS. reads पक्वमायत्.
4. KS. ṚV. IV, 57, 8 वाहैः. Kap. agrees with AV. III, 17, 5; TS. IV, 2, 5, 6.

कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥३॥ Cf. XXXI, 4; KS. XVI, 12; XX, 2; MS. II, 7, 12; III, 2, 4; TS, IV, 2, 5, V, 2, 4.

या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रतो[1] यूयमिमं मे अगदं कृत ॥
पुष्पवतीः प्रसूमतीः फलिनीरफला उत ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।
रपांसि विघ्नतीरित रक्षश्चातयमानाः ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ[2] पूरुषम् ॥
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥
यदोषधयः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष[3] ॥
अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमुः ।
ओषधयः प्राचुच्यवुर्यत्किंच[4] तन्वो रपः ॥

---

1. So also MS. KS. ०क्रतवो.
2. KS. सनवाथ. Kap. follows ṚV. X, 97, 5. One of Kāṭh. mss. also has सनवथ. MS. padapāṭha ms. agrees with Kap.
3. The ms. तव पुरुषः.
4. KS. ०चित्. Kap follows ṚV. X, 97, 10.

यास्त आतस्थुरात्मानमाविविशुः [1]परुष्परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥
यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
निष्कृतिर्नाम वो[2] माताथो यूयं स्थ निष्कृतीः[3] ।
सीराः[4] पतत्रिणी स्थन[5] यदामयति निष्कृथ[6] ॥
साकं यक्ष्म प्रपत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥
[7]अपवतन्तीरवदन्दिवो ऽन्तेभ्यस्परि ।
यं जीवमश्नवामहै न सा रिष्याति पूरुषः[8] ॥४॥ Cf. KS. XVI, 13; MS. II, 7, 13; TS. IV, 2, 6.

मा नो हिंसीज्जनिता यः पृथिव्या[9] यो वा[10] दिवं सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
वपां ते अग्निरिषितो अरोहत् ॥
अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि ॥

---

1. The ms. ॰विविशुष्प॰.
2. The ms. निःक्रतिर्नामावा (wrongly written for मावा=म वो)
3. The ms. तिः. KS. त्वमसि निष्कृतिः. ṚV. X, 97, 9 agrees with Kap.
4. Thus ṚV. ib. The ms. सुराः. KS. सराः.
5. KS. स्थ. Kap. follows ṚV. ib.
6. KS. MS. TS. निष्कृत. Kap. follows ṚV. ib.
7. The ms. अवपश्य॰.
8. The ms. पुरुष. Three more verses follow in KS.
9. The ms. पृथिव्यां.
10. KS. omits वा. Kap. agrees with ṚV. X, 121, 9.

इषमूर्जमहमित आदमृतस्य[1] योनिं महिषस्य धाराम् ।
आ नो गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥
अग्ने तव श्रवो वयो महि भ्राजन्ते [2]अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रः पितरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे विश्वे संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि[3] पृणक्षि सानसिं रयिम् ॥
ऋतावानं महिषं विश्वदर्शतमग्निं[4] सुम्नाय दधिरे पुरो जनाः ।
श्रुतकर्णं सप्रथस्तमं त्वा युजा विप्रासो मानुषा युगा ॥
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसे[5] महे ।
रातिं वामस्य सुभगां महीमिषं पृणक्षि दर्शतं क्रतुम् ॥
आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व [॥५॥]

Cf. XXXI, 6; KS. XVI, 14; XX, 4; MS. II, 7, 14; III, 2, 5; TS. IV, 2, 7; V, 2, 5, 6.

अपां पृष्ठमसि[6] ॥

---

1. KS. आघृतस्य
2. KS. भ्राजन्त्य॰. Kap. agrees with ṚV. X, 140, 1.
3. The ms. विराजति.
4. The ms. adds न.
5. KS. शवसे. Cf. ṚV. X, 140, 5 राधसो महः.
6. KS. gives the complete verse. For sakalapāṭha we have to refer back to the Kap. anuvāka corresponding to KS. XVI, 3 (p. 238, II. 4-5), which is now lost.

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥
हिरण्यगर्भः समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
द्रप्सश्चस्कन्द[1] ॥

नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
य इषवो यातुधानानां[2] ये वा वनस्पतींरनु ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥
ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
ये अप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥
कृणुष्व पाजः प्रसितिं[3] न पृथ्वीं याहि राजेवामवां इभेन ।
तृष्वीमनु प्रसितिं द्रूणानो ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत ॥
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रां ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने[4] ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥

---

1. KS. gives the complete verse. For an earlier reference see Kāṭh. XIII, 9 (p. 191, II, 20-21).
2. The ms. येषु वा यातुधानानां. KS. येषु वा यातुधाना. Cf. MS. TS. VS. XIII, 7.
3. The ms. प्रासृतिं. This and the next four mantras are ṚV. IV, 4, 1-5.
4. The ms. °दावि. कृणुष्व दैव्यानग्ने.

